यामेवान्वयबोधात् । स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वादिरूपेण शक्यस्तत्तद्रूपेण बोधादित्यन्यत्र विस्तरः ॥ २ ॥ ( ४० )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
नञर्थनिर्णयः समाप्तः ॥

---

( अथ निपातद्योतकत्वनिर्णयः । )

---

प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तं वैषम्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते—

**द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।**
**उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ १ ॥ ( ४१ )**

**येन** हेतुना **प्रादयो द्योतका**स्तेनैव हेतुना चादयो निपातास्**तथा** द्योतका इत्यर्थः। अयं भावः—ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः । भवतीत्यत्राप्यापत्तेः । नोपसर्गार्थः । तथा सत्यप्रकृत्यर्थतया तत्राऽऽख्यातार्थानन्वयापत्तेः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । अनुगच्छतीत्यादावनुभवादिप्रत्ययापत्तेश्च । न विशिष्टार्थो गौरवात् । तथा च धातोरेव विद्यमानत्वादिवाचकस्यास्तु लक्षणा । उपसर्गस्तात्पर्यग्राहक इत्यस्तु । तथा तात्पर्यग्राहकत्वमेव द्योतकत्वमिति । एतच्चादिष्वपि तुल्यम् । चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम्, इवशब्दस्तात्पर्यग्राहक इत्यस्य सुवचत्वात् , इति स्वयं युक्त्यन्तरमाह—**उपास्येते इति।** अत्र ह्युपासना किमुपसर्गार्थो विशिष्टस्य धातुमात्रस्य वा । नाऽऽद्यः । तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्याऽऽसधातोरुपासनारूपफलवाचकत्वाभावादनापत्तेस्ततः कर्मणि लकारो न स्यात् । न द्वितीयो गौरवात् । तृतीये त्वागतं द्योतकत्वं तात्पर्यग्राहकत्वलाभादिति भावः । **दृश्यत** इत्यत्र कर्मणीति शेषः॥१॥(४१)

तच्चादिष्वपि तुल्यमित्याह—

**तथाऽन्यत्र निपातेऽपि लकारः कर्मवाचकः ।**
**विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥ २ ॥ ( ४२ )**

**अन्यत्र** साक्षात्क्रियतेऽलं क्रियत उरी क्रियते शिव इत्यादौ । अत्रापि धातोस्तदर्थे कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवदेव द्योतकत्वममीषामपीत्यर्थः । यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाऽप्येष्वर्थेषु सकर्मकता न स्यात् । अन्यथा वायुर्वि+कुरुते सैन्धवा विकुर्वत इत्यत्रापि स्यादिति भावः । अथोपासना-

---

\+ अकर्मकाच्चेतिविहितात्मनेपदानुपपत्तिरिति भावः ।

( निपातद्योतकत्वनिर्णयः )
साक्षात्कारादिर्निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोः" इति कोशस्वरसात् । तदनुकूलो व्यापार एव धात्वर्थोऽस्तु स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न । नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासंभवान्निपातार्थधात्वर्थयोरन्वयस्यैवासंभवादन्यथा तण्डुलः* पचतीत्यत्रापि कर्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति । किं च प्रादीनां वाचकत्वे भूयान्प्रकर्षः कीदृशो निश्चय इतिवद्भूयान्प्र कीदृशो निरित्यपि स्यात् । अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यत एव द्योतकता तेषां स्यादिति साधकान्तरमभिप्रेत्याऽऽह—**विशेषणेति** । शोभनः समुच्चयो द्रष्टव्य इतिवच्छोभनश्च द्रष्टव्य इत्यस्याऽऽपत्तेस्तुल्यसमाधेयत्वादिति भावः । अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठयादिकं भेदेनान्वयासंभवः । अन्यथा राजा पुरुष इत्यत्राप्यापत्तेरित्यभिप्रेत्याऽऽह—**प्रादीति** । धवखदिरयोः समुच्चय इतिवद्धवस्य च खदिरस्य चेत्येव स्यादिति भावः ॥ २ ॥ ( ४२ )

ननु प्रातिपदिकार्थयोर्भेदेनान्वयबोधे विरुद्धविभक्तिजन्योपस्थितिर्हेतुरिति कार्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याऽऽह—

**पदार्थः सदृशाऽन्वेति विभागेन कदाऽपि न ।**
**निपातेतरसंकोचे प्रमाणं किं विभावय ॥ ३ ॥ ( ४३ )**

**सदृशा** सदृशेन समानाधिकरणेनेति यावत् । **अन्वेति,** अभेदेनेति शेषः । **विभागेन,** असदृशेन, असमानाधिकरणेनेति यावत् । अयमर्थः—समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावो गौरवं च । अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः । अत एव घटो नास्तीत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः ॥ ३ ॥ ( ४३ )

अपि च निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह—

**शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ।**
**इत्यादावन्वयो न स्यात्सुपां च श्रवणं ततः ॥ ४ ॥ (४४)**

अत्रोस्रसदृशैः शरै रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः । =अयं चोस्रादिशब्दानां तत्सदृशपरत्व इवशब्दस्य च द्योतकत्वे संगच्छते । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः । तथाहि—उस्रैरिति करणे तृतीया । न चोस्रोऽत्र करणमिवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यमप्रकृत्यर्थत्वात् ।

---

* अत्र नामार्थः कर्मैव । = उक्तार्थान्वयबोधः ।

---

१ छ. °त्यस्य राजसंबन्धी पुरुष इत्यप्या° ।

इवशब्दस्य वाऽसत्त्वार्थकतया तदुत्तरं तृतीयाया असंभवात् । संभवे वा श्रवणप्रसङ्गात् । उस्रपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह—**सुपां चेति** । सुपां श्रवणं चेत्यर्थः । चकारादुस्रपदोत्तरतृतीयानन्वयः समुच्चीयते । इत्यादावित्यादिपदात् " वागर्थाविव संपृक्तौ पार्वतीपरमेश्वरौ वन्दे " इत्यत्र वागर्थयोर्वेदिकर्मत्वाभावात्तदुत्तराद्वितीयाया अनन्वय इव वागर्थस्य कर्मत्वबोधकासंभवश्च संगृह्यते । यदि च विशेषणविभक्तिरभेदार्थिका साधुत्वमात्रार्था वा तदाऽपीवशब्दस्य वाचकत्वेऽनन्वय एव । उस्रसदृशां शराणां समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात् । बाधादभेदेनापि न सः । न ह्युस्राभिन्नसदृशाभिन्नः शर इत्यर्थो द्रष्टव्यः ॥ ४ ॥ ( ४४ )

ननु त्वन्मतेऽब्राह्मण इत्यादौ तत्पुरुषलक्षणाव्याप्त्यापत्तिः पूर्वपदस्यानर्थकत्वेनोत्तरपदार्थप्राधान्याभावात् । उपसर्गस्यार्थवत्त्वाभावेन प्रातिपदिकत्वाभावाद्विभक्तिश्च ततो न स्यादित्यत आह—

**नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ।**
**द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ५ ॥ ( ४५ )**

नञ्समासादौ योत्तरपदप्रधानता सा द्योत्यमर्थमादायैव । तमेवार्थमादायार्थवत्त्वात्प्रातिपदिकत्वमित्यर्थः । वस्तुतस्तु " अव्ययादाप्सुपः " [ पा० सू० २-४-८२ ] इति ज्ञापकात्सुबुत्पत्तिः । " निपातस्यानर्थकस्य " इति वार्तिकाद्वा प्रातिपदिकत्वम् । कृत्तद्धितसमासाश्चेत्यनुक्तसमुच्चयार्थकचकारेण निपातानां संग्रह इति बोध्यम् । तस्माद्युक्तं निपातानां द्योतकत्वम् ।

*उक्तं चाऽऽकृत्यधिकरणवार्तिके—

" +चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते =संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते " इति ॥

" उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥ "

इति वृद्धोक्तावुपसर्गपदं निपातोपलक्षणम् । धातुपदं पदान्तरस्येति बोध्यम् ॥ ५ ॥ ( ४५ )

नन्वन्वयव्यतिरेकाभ्यां निपातानां तदर्थवाचकत्वमेव युक्तं बोधकतारूपशक्तेरबा-

---

* मीमांसकसंमतिमाह । + नामाख्यातोपसर्गनिपाते । = जातिर्वा व्यक्तिर्वा व्यापार उत वा फलम् ।

---

१ छ. °दन्यः प्रतीय° ।

( निपातद्योतकत्वनिर्णयः )

धाच्च । किं चोक्तरीत्या पचतीत्यादौ धातोरेव कर्तृविशिष्टभावनायां लक्षणाऽस्तु तात्पर्यग्राहकत्वमात्रं तिङादेः स्यादित्यरुचेः पक्षान्तरमाह—

**निपातानां वाचकत्वमन्वयव्यतिरेकयोः ।**
**युक्तं वा न तु तद्युक्तं परेषां मतमेव नः ॥ ६ ॥ ( ४६ )**

एवं च धात्वर्थप्रातिपदिकार्थयोर्भेदेनान्वयबोधो न व्युत्पन्न इति निपातातिरिक्तविषयं, समानाधिकरणप्रातिपदिकार्थयोरभेदेनान्वय इत्यपि तथेत्यगत्या कल्पनीयमिति भावः । **न त्विति** । नैयायिकोक्तं प्रादिचादिवैषम्यमित्यर्थः । यत्तु सर्वेषां निपातानां वाचकत्वेऽर्थवत्सूत्रेणैव तेषां प्रातिपदिकत्वसंभवात् " निपातस्यानर्थकस्य " इति विधिवैयर्थ्यं, सर्वेषां द्योतकत्वे चानर्थकस्येति व्यर्थम्, तथा च केचिद्द्योतकाः केचिद्वाचका इत्यभ्युपेयमिति । तन्न । एवं हि चादयो द्योदकाः प्रादयो वाचका इति वैपरीत्यावारणात् । सर्वथाऽनर्थकानां पादपूरणमात्रार्थमुपात्तानां संग्रहाय वार्तिकारम्भस्य कैयटादौ स्पष्टत्वाच्च । तस्य प्रत्याख्यातत्वाच्च । परेषामिति बहुवचनं मीमांसकसंग्रहाय । केवलवृक्षशब्दात्समुच्चयाबोधाच्चकारश्रवणे तद्बोधाच्चकार एव तद्वाचको न द्योतकः । किं च द्योतकत्वे पदान्तराणां तत्र शक्तिः कल्प्या चकारादेर्द्योतकत्वशक्तिश्च कल्प्येति गौरवं स्यादिति हि समुच्चयाधिकरणे स्थितं तदपि न युक्तमिति भावः । तथा हि—अन्वयव्यतिरेकौ तात्पर्यग्राहकत्वेनाप्युपयुक्तौ घटादिपदानामेव समुच्चिते लक्षणा तात्पर्यग्राहकः प्रकरणादिवच्चादिरिति स्वीकारान्न शक्तिद्वयकल्पनाऽपि । अस्माकं लक्षणग्रहणदशायां बोधोत्तत्कार्यकारणभाव आवश्यकः । एवं शक्तिग्रहस्यापीति पक्षद्वयेऽपि कल्प्यान्तराभावेन गौरवाभावादुभयमपि युक्तमित्यभिमतम् । अत एव " स वाचको विशेषाणां संभवाद्द्योतकोऽपि च " इतिवाक्यपदीयं संगच्छते । दर्शनान्तररीत्या वाचकत्वमेव, द्योतकत्वमेवेति नियमस्तु न युक्त इति ध्वनयन्नाह—**मतमेवेति** ॥ ६ ॥ ( ४६ )

पर्यवसितमुपसंहरन्नाह—

**निपातत्वं परेषां यत्तदस्माकमिति स्थितिः ।**
**व्यापकत्वाच्छक्ततायास्तवच्छेदकमिष्यते ॥ ७ ॥ ( ४७ )**

( इति भट्टोजिदीक्षितविरचितकारिकासु निपातद्योतकत्वनिर्णयः । )

**परेषां यन्निपातत्वमसत्त्वार्थकत्वे** सति चादिगणपठितत्वं शक्तिसंबन्धेन निपातपदवत्त्वं चोपाधिर्जातिर्वा **तदेवास्माकमपि** परं तु सामान्यधर्मे प्रमाणानां पक्षपाताच्छक्तता द्योतकता वा तदवच्छेदेनैव कल्प्येति नैयायिकोक्तं प्रादिचाद्योर्वैषम्यमयुक्तमित्यर्थः ।

---

१ ज. °क्षणाग्र° । २ ज. °धाभावात्त° ।

व्यापकत्वात् , सामान्यत्वात् । शक्तताया इत्युपलक्षणं द्योतकताया वेत्यपि द्रष्टव्यम् ॥ ७ ॥ ( ४७ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे निपातानां द्योतकत्वादिनिर्णयः समाप्तः ।

---

( अथ भावप्रत्ययार्थनिर्णयः । )

---

भावप्रत्ययार्थमाह—

**कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।**
**त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥ १ ॥ ( ४८ )**

" कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः " इति वार्तिकवचनमिति मीमांसकादीनां भ्रममपाकुर्वन्नाह—**टीकायामिति** । भर्तृहरिणा महाभाष्यटीकायामित्यर्थः । **त्वतलोरिति** । भावप्रत्ययमात्रोपलक्षणम् । अयमर्थः—समासादौ शक्तिः कल्प्यमाना राजादिसंबन्धविशिष्टे कल्प्यत इत्युक्तम् । तथा च तदुत्तरभावप्रत्ययः संबन्धं वदतीत्यर्थः । एतदपि भेदः संसर्ग उभयं वेत्युक्तेषु पक्षेषु भेदपक्षे न संभवतीत्यत आह—**मतभेदेति** । पक्षभेदेनेत्यर्थः । एवं च राजपुरुषत्वमौपगवत्वं पक्तृत्वमित्यादौ स्वस्वामिभावः । अपत्यापत्यवत्संबन्धः क्रियाकारकभावसंबन्ध इत्यन्वयबोधः । औपगवादावव्यभिचारिसंबन्धे त्वर्थान्तरवृत्तिस्तद्धित उदाहार्यः । दामोदरत्वं कृष्णसर्पत्वमित्यादौ जातिविशेषबोधादाह—**अन्यत्रेति** । रूढेरभिन्नरूपादव्यभिचरितसंबन्धेभ्यश्चान्यत्रेत्यर्थः । रूढिरुक्ता । द्वितीयं यथा **शुक्लत्वम्** । अत्र " तदस्यास्त्यस्मिन्" इति मतुपो " गुणवचनेभ्यो मतुपो लुगिष्टः " इति लुप्तत्वात्तद्धितान्तत्वेऽपि घटः शुक्ल इत्यभेदप्रत्ययाद्गुणस्यैव प्रकारत्वेन मानं जायते, तृतीये सतो भावः **सत्तेति**, अत्र जातावेव प्रत्यय इति दिक् ॥ १ ॥ ( ४८ )

दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता तद्धितस्येति वदन्तं मीमांसकमन्यं प्रत्याह—

**अत्रार्धजरतीयं स्याद्दर्शनान्तरगामिना(णा)म् ।**
**सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु ॥ २ ॥ ( ४९ )**

अत्र, भावप्रत्ययविषये । तथा हि—दामोदरत्वं घटत्वमित्यादौ भावप्रत्ययस्य संबन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यादिष्वपि तदभिधानं न स्यात् । प्रकृति-

---

१ ज. तथा ।

( भावप्रत्ययार्थनिर्णयः )

जन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते । अन्यथा घटत्वमित्यत्र द्रव्यत्वादेर्[1]दण्डित्वमित्यादौ दण्डादेश्च तदुत्तरभावप्रत्ययवाच्यतापत्तेः । न च तन्मते दण्डीत्यादिबोधे संबन्धः प्रकारः ।

यत्तु—

" यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः ।
तदा गत्यन्तराभावात्संबन्धो वाच्य आश्रितः "

इति, तन्न । इनादेः संबन्धवाचकत्वेनोपपत्तावग*त्यभावात् । प्रपञ्चितं चैतद्दादावेव वैयाकरणभूषणे । ननु तवापीदं वैषम्यं कथमित्यत आह-सिद्धान्ते त्विति ।(+जायन्त इति वक्ष्यमाणशेषेणान्वितं, सिद्धान्ते प्रकृतिजन्यबोधप्रकारे त्वादयो जायन्त इत्यर्थः । स प्रकृतिजन्यबोधप्रकारः क इत्यत्र पक्षद्वयं स्थितमिति योजना ) ॥ २ ॥ ( ४९ )

तौ पक्षावाह—

**प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारताम् ।**
**धर्ममात्रं वाच्यमिति यद्वा शब्दपरा[3]दमी ॥**
**जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ॥ ३ ॥ ( ५० )**

( इति भट्टोजिदीक्षितविरचितकारिकासु भावप्रत्ययार्थनिर्णयः । )

प्रयोग उपाधिर्निमित्तं प्रकृत्यर्थ[4]प्रकारतया भासमानं धर्मं वाच्यतयाऽऽश्रित्य त्वादयो जायन्ते । प्रकृतिजन्यबोधप्रकारस्त्वाद्यर्थ इति यावत् । ननु घटत्वमित्यत्र[5] प्रकारत्वात्तदुत्तरत्वप्रत्यये घटत्वत्वस्यापि वाच्यता स्यादित्यत्रेष्टापत्तिमाह—**धर्ममात्रमिति** । न त्वत्र लघुगुरुविचार इत्यभिप्रायः । तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव घटत्वत्वादिरूपत्वात् ।

" संबन्धिभेदात्सत्तैव विद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः " ॥

इति वाक्यपदीयात् । उक्तं च " तस्य भावस्त्वतलौ " [पा० सू० ५-१-११९] इति सूत्रे वार्तिककारैः—" यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ " इति । **यस्य गुणस्य** विशेषणतया भासमानस्य **भावादाश्रयत्वात्**, **द्रव्ये** विशेष्ये । **शब्दनिवेशः** शब्दप्रवृत्तिस्तस्मिन्वाच्ये त्वतलावित्यर्थः । तथा च रूपादि-

---

* संबन्धस्यैव भावत्वात् । + धनुश्चिह्नान्तर्गतग्रन्थश्छ. पुस्तके नास्ति ।

---

१ ङ. च. °दण्डीत्या° । २ ज. °त्यर्थे प्र° । ३ छ. °रा अमी । ४ ज. °त्यर्थे प्र° । ५ ङ. च. °त्र घटत्वनिमित्तप्र° ।

शब्देभ्यो जातौ, शुक्लाणुदीर्घमहदादिभ्यो गुणे[1], पाचकादिशब्देभ्यः क्रियायाम्, घटादिशब्देभ्यो जातौ प्रत्ययः, रूपादिशब्दानां जातिप्रकारकबोधजनकत्वात्। पाचकादिशब्दानां क्रियाप्रकारकबोधजनकत्वे तस्यां प्रत्ययः। संसर्गप्रकारकबोधजनकत्वमिति मते च संसर्ग इति व्यवस्था सूपपादेति भावः। *तत्र जातिवाचकानां +व्यक्तय एव शक्यतावच्छेदिकास्तथा च घटत्वमित्यत्र घटवृत्तिरसाधारणो धर्म इति बोध इत्यादि द्रष्टव्यम्। पक्षान्तरमाह—**यद्वेति**। " यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति स तेषां भावः " इति वार्तिकोक्तो यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपि। **भवन्ति** वाचकत्वेन प्रवर्तन्त इति भावाः शब्दाः **स्वेन** स्वरूपेणा**र्थेन** भवन्ति प्रवर्तन्तेऽतः **स तेषां भावः** प्रवृत्तिनिमित्तमित्यर्थः। अयं भावः—अर्थवच्छब्दोऽपि द्रव्ये प्रकारः, हरिहरनलेक्ष्वाकुयुधिष्ठिरवसिष्ठादिशब्देभ्यस्तत्तद्वाच्यः कश्चिदासीदिति शब्दप्रकारबोधस्य सर्वसिद्धत्वात्। ⊙अन्यथा वनौषधिवर्गादेर्नागरिकान्प्रत्यबोधकत्वापत्तेश्च। एवमेवाप्रसिद्धार्थकपदेष्वनुभवः सर्वसिद्धः, न तु घटादिपदेष्विव तत्तज्जात्यादिरूपेण। तथा चोभयमवच्छेदकम्। (◡एवमेव प्रसिद्धपदार्थेषु ) यस्य यथा शक्तिग्रहस्तस्य जात्यादिरूपेणैवोपस्थितिः। पदप्रकारकः शक्तिग्रहस्तु विशिष्य नापेक्षितः किं तु इदं पदं क्वचिच्छक्तं साधुपदत्वादित्यादिरूप एवापेक्ष्यत इति विशिष्यागृहीतशक्तिकेभ्यस्तथैव बोधस्तथा च शब्दोऽपि त्वप्रत्ययार्थ इति प्रपञ्चितं भूषणे ॥ ३ ॥ ( ९० )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
भावप्रत्ययार्थनिर्णयः।

---

( अथ देवताप्रत्ययार्थनिर्णयः। )

---

साऽस्य देवतेत्यत्र देवताविशिष्टं देयं प्रत्ययार्थः। ऐन्द्रं वैश्वदेवीत्यादाविन्द्रादेर्देवतात्वोपस्थापकान्तराभावात्तेन रूपेणोपस्थितये शक्तिकल्पनावश्यकत्वात्।

× अत एव—

" आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् " इति,
" केवलाद्देवतावाची तद्धितो[2]ऽग्नेः समुच्चरन्।
नान्ययुक्ताग्निदैवत्यं प्रतिपादयितुं क्षमः "

---

* जात्यादिवाचकभावप्रत्ययेषु मध्ये। + भावप्रत्ययप्रकृत्यर्थरूपाः। ⊙ शब्दानां प्रकारतयाऽभाने। ◡धनुश्चिह्नान्तर्गतं नास्ति ङ. छ. पुस्तकयोः। ×देवतासंबन्धिनः प्रत्ययार्थत्वादेव।

---

१ च. °णे पक्त्वादि°। २ ङ. च. °तोऽग्ने स°।

( देवताप्रत्ययार्थनिर्णयः )

इति च मीमांसकैरप्युक्तमित्याशयेनाऽऽह—

प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् ।
अभेदश्चात्र संसर्ग आग्नेयादावियं स्थितिः ॥
देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥ १ ॥ ( ५१ )

एकदेशे देवतारूपे। तच्च विशेषणमभेदेनेत्याह—अभेदश्चेति । ननु देवतायाः प्रत्ययार्थैकदेशत्वान्न प्रकृत्यर्थस्य तत्राभेदेनाप्यन्वय इत्याशयेनाऽऽह—देवतायामिति । तथा च पदार्थैकदेशतैव नास्तीति भावः ॥ १ ॥ ( ५१ )

नन्वग्न्यादिदेवस्य प्रकृत्यैव लाभान्न तत्र शक्तिः कल्प्या । न च देवतात्वेन रूपेणोपस्थितये सा कल्प्यते प्रकृतेर्लक्षणयैव तथोपस्थितिसंभवात् । उपसर्गाणां द्योतकत्वनये प्रजयतीत्यत्र प्रकृष्टजयप्रत्ययवदित्यभिप्रेत्याऽऽह—

प्रदेय एव वा शक्तिः प्रकृतेर्वाऽस्तु लक्षणा ।
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥ २ ॥ ( ५२ )

न चैन्द्रं दधीत्यादौ द्रव्यस्य पदान्तराल्लाभात्कुतः पुनः प्रत्ययस्य तत्र शक्तिः कल्प्यत इति वाच्यम्। पदान्तराश्रवणेऽपि तत्प्रतीतेरैन्द्रं दधीति सामानाधिकरण्याच्च । *अन्यथाऽऽख्यातस्यापि कर्तृकर्मवाचित्वं न स्यात् । +मीमांसकानां पुनः प्रत्ययस्य देवतात्वमेवार्थोऽस्तु । द्रव्यं पदान्तराल्लभ्यत एवेति आख्यातस्य कर्तृवद्वाच्यत्वं माऽस्त्विति कुतो न शक्यते वक्तुमिति दिक् । देवतायां देवतात्वरूपेण निरूढेत्यनुपपत्तिज्ञानापूर्वकत्वमनादिप्रयोगावच्छिन्नत्वं वा तत्त्वमिति भावः ॥ २ ॥ ( ५२ )

अनयैव रीत्याऽन्यत्राप्यवधेयमित्याह—

क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ।
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥ ३ ॥ ( ५ )

( इति भट्टोजिदीक्षितविरचितकारिकासु देवताप्रत्ययार्थनिर्णयः ।)

" तदस्यां प्रहरणमिति क्रीडायां णः " [ पा० सू० ४-२-५७ ] इत्यत्र प्रहरणविशिष्टा क्रीडा प्रहरणक्रीडे क्रीडामात्रं चेत्यर्थः । आदिना " सोऽस्य निवासः " [ पा० सू० ४-३-८९ ] " साऽस्मिन्पौर्णमासीति संज्ञायाम् " [ पा० सू० ४-२-२१ ] " तदस्यास्त्यस्मिन्निति मतुप् " [ पा० सू० ५-२-९४ ] इत्यादिकं संगृह्यते । वृत्तिमात्रेऽतिरिक्तशक्तेः " समर्थः पदविधिः " [ पा० सू० २-१-१ ] इति सूत्राल्लाभादुक्तो विचारः शास्त्रान्तरीयैः सह तद्रीत्यैवोक्तः । आरोपितप्रकृतिप्रत्य-

---

* असमभिव्याहारे । + पूर्वं वैयाकरणान्प्रति दूषणम् ।

यार्थमादाय वा । वस्तुतो विशिष्टशक्त्यैवार्थोपस्थितेरित्याह—**वस्तुत इति** ॥ ३ ॥ ( ५३ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे[१] देवताप्रत्ययार्थनिर्णयः ॥

---

( अथाभेदैकत्वसंख्याया वृत्तौ भाननिर्णयः )

---

वृत्तिप्रसङ्गात्तत्राभेदैकत्वसंख्या प्रतीयत इति सिद्धान्तं दृष्टान्तेन प्रतिपादयति—

**अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः ।**
**कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद्यथोच्यते ॥ १ ॥ ( ५४ )**

( इति भट्टोजिदीक्षितविरचितकारिकास्वभेदैकत्वसंख्याया वृत्तौ भाननिर्णयः । )

संख्याविशेषाणामविभागेन सत्त्वमभेदैकत्वसंख्या ।
उक्तं च वाक्यपदीये—

" यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः " इति ॥

परित्यक्तविशेषं वा संख्यासामान्यं तत् ।
उक्तं च—

" भेदानां वा परित्यागात्संख्यात्मा स तथाविधः ।
व्यापाराज्जातिभागस्य भेदापोहेन वर्तते ॥
अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादिभेदापोहस्तु गम्यते " इति ॥

अस्या वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः । इति मतस्थितिर्वैयाकरणानाम् । अयं भावः—राजपुरुष इत्यादौ राज्ञे राज्ञो राज्ञां वाऽयं पुरुष इति जिज्ञासा जायते । विशेषजिज्ञासा[३] च सामान्यज्ञानपूर्विकेति सामान्यरूपेण तत्प्रतीतिः शब्दादावश्यकी । अतस्तस्यां शक्तिरिति । तस्या एकत्वेन प्रतीतौ न्यायमाह—**कपिञ्जलेति** । बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात्तद्रूपेणैव भानवदेकत्वस्य सर्वतः प्रथमोपस्थितत्वमस्तीति भावः । वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा । तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावात्तत्तद्रूपेणैव वाच्यता[४] स्यादिति ध्येयम् ॥ ॥ १ ॥ ( ५४ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारेऽभेदैकत्वसंख्याया वृत्तौ भाननिर्णयः समाप्तः ॥

---

१ च. ज. °रे यौगिकार्थ° । २ च. °ख्या स च त° । ३ छ. °सायां सामान्यरू° । ४ च. हेतुता ।

( उद्देश्यविधेययोः संख्याविवक्षानिर्णयः )

( अथोद्देश्यविधेययोः संख्याविवक्षानिर्णयः । )

---

संख्याप्रसङ्गादुद्देश्यविधेययोः संख्याविवक्षाविवक्षे निरूपयति—

लक्ष्यानुरोधात्संख्यायास्तन्त्रातन्त्रे मते यतः ।
पश्वेकत्वादिहेतूनामाश्रयणमनाकरम् ॥ १ ॥ ( ५५ )

*ग्रहं संमार्ष्टीत्यत्रोद्देश्यग्रहगतमेकत्वमविवक्षितमितिवन्नास्माकमुद्देश्यविशेषणाविवक्षानियमः । धातोरित्येकत्वस्य विवक्षितत्वात् ।

" उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ।
तदा सर्वैर्विशिष्येत द्वंद्वोत्पन्नसुबर्थवत् " ॥

इति शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च । "+आर्धधातुकस्येड्वलादेः " [ पा० सू० ७-२-३५ ] इत्यत्रानुवाद्यार्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च । एवं पशुना यजेतेतिवद्विधेयविशेषणं विवक्षितमित्यपि न । " रदाभ्यां निष्ठातो नः पूर्वस्य च दः " [ पा० सू० ८-२-४२ ] इत्यत्र नकारद्वयविधानानापत्तेः । तथा च भिन्न इत्यत्र नकारद्वयलाभो न स्यात् । " आद्गुणः " [ पा० सू० ६-१-८७ ] इत्यादावेकत्वविवक्षयैवोपपत्तौ " एकः पूर्वपरयोः " [ पा० सू० ६-१-८४ ] इत्यत्रैकग्रहणवैयर्थ्यापत्तेश्चेति भावः । शब्दार्थस्तु—संख्याया लक्ष्यानुरोधात्तन्त्रातन्त्रे यतो मते अतः पश्वेकत्वाधिकरणोक्तहेतूनामाश्रयणं नास्मत्सिद्धान्तसिद्धमिति । आदिना ग्रहैकत्वसंग्रहः ॥ १ ॥ ( ५५ )

ननु विधेयविशेषणविवक्षाऽऽवश्यकी अन्यथा[1]ऽनन्तनकाराद्यापत्तेर्भिन्नमित्यत्र नकारद्वयवदन्येषामप्यापत्तेः । एकः पूर्वपरयोरित्यत्रैकग्रहणं च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याऽऽह—

विधेये भेदकं तन्त्रमन्यतो नियमो न हि ।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ २ ॥ ( ५६ )

भेदकं विशेषणं तन्त्रं विवक्षितं विधेयविशेषणं विवक्षितमित्यस्तु । तथाऽप्यन्यतः, अनुवाद्यस्य नियमो न हि । क्वचित्तन्त्रं क्वचिन्नेत्यर्थः । ग्रहैकत्वादौ यो हेतुर्वाक्यभेदादिस्तस्यात्राऽऽश्रयणमनाकरम् । एकत्वविशिष्टं धातुं वलादित्वविशिष्टमार्धधातुकं चोद्दिश्य प्रत्ययेडागमादेर्विधिसंभवादिति भावः ॥ २ ॥ ( ५६ )

---

* यज्ञपात्रम् । एकत्वविवक्षायां सर्वपात्राणां भावे वैगुण्यं स्यात् । + सर्वधातूपस्थित्याऽनिष्टं स्यादत आर्धधातुकस्येति ।

---

[1] ज. 'था सुध्युपास्य इत्यत्रानन्तयकारापत्तेः । भिन्न' ।

नन्वेवं भिन्न इत्यत्र नकारद्वयलाभो न स्यादित्यत आह—

**रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।**
**क्षतिर्नैवास्ति तन्नत्वे विधेये भेदकस्य तु ॥ ३ ॥ ( ५७ )**

( इति भट्टोजिदीक्षितविरचितकारिकासूद्देश्यविधेययोः संख्याविवक्षानिर्णयः । )

चकारसूचितं निष्ठातस्य नः पूर्वस्य दस्य च न इति वाक्यभेदमादाय नकारद्वय-लाभ इत्यर्थः ॥ ३ ॥ ( ५७ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसार उद्देश्यविधेययोः संख्याविवक्षानिर्णयः समाप्तः ॥

---

( अथ क्त्वाद्यर्थनिर्णयः । )

---

क्त्वाप्रत्ययादेरर्थं निरूपयति—

**अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ।**
**समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥ १ ॥ ( ५८ )**

( इति भट्टोजिदीक्षितविरचितकारिकासु क्त्वाद्यर्थनिर्णयः । )

**तुमादयस्तु**मुनादयः । **प्रकृत्यर्थे** भावे । आदिना क्त्वादेः संग्रहः । भाव इत्यत्र मानमाह—**अव्यय कृत इति** । " अव्ययकृतो भावे " इति वार्तिकादित्यर्थः । ननु " समानकर्तृकयोः पूर्वकाले " [ पा० सू० ३-४-२१ ] इत्यादिसूत्राणां का *गति-स्तत्राऽऽह—**समानकर्तृकत्वादी**ति । अयं भावः—भोक्तुं पचति भुक्त्वा व्रजती-त्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययोर्विशेषणविशेष्यभावमन्तरेणानुपपन्ना । =अन्यथा भुङ्क्ते व्रजतीत्यादावप्येकवाक्यतापत्तेः । तथा च +तयोर्विशेषणविशेष्यभावनि-रूपकः संसर्गो जन्यत्वं सामानाधिकरण्यं × पूर्वोत्तरभावो ÷व्याप्यत्वं चेत्यादिरनेक†-विधः । तथा च भोक्तुं पचति भुक्त्वा तृप्त इत्यादौ भोजनजनिका पाकक्रिया भोजनजन्या तृप्तिरिति बोधः । ꞉अत एव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि पीत्वा तृप्त इति न प्रयोगः । सामानाधिकरण्यस्यापि संसर्गत्वेनार्थात्समानकर्तृकत्वमपि लब्धम् । भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकरण्यं च संसर्ग इति भोजनसमानाधिकरणा तदु-त्तरकालिकी व्रजनक्रियेति बोधः । ⌒अधीत्य तिष्ठति मुखं व्यादाय स्वपितीत्यादौ

---

* भावस्यैव प्रतीतौ पूर्वकालस्य कथं प्रतीतिरिति विचारः । = विशेष्यविशेषणभावमन्त-रेणाप्येकवाक्यत्वोपगमे । + क्रिययोः । × विशेषणक्रियोत्तरसमयवृत्तित्वम् । ÷ अविनाभावित्वम् । † संसर्ग इत्यर्थः । ꞉ जन्यत्वस्यापि संसर्गत्वाभ्युपगमादेव । ⌒ व्याप्यत्वस्य संसर्गतायां युक्तिं प्रदर्शयति—अधीत्येति ।

---

१ च. तृप्यते ।

( क्त्वाद्यर्थनिर्णयः )

चाध्ययनव्यादानयोरभावकालेऽप्रयोगाद्यदा यदाऽस्य स्थितिः स्वापश्च तदा तदाऽध्ययनं मुखव्यादानं चेति कालविशेषावच्छिन्नव्याप्यत्वबोधाद्व्याप्यत्वं सामानाधिकरण्यं च संसर्गः । एवं चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यतालाभ इति युक्तमव्ययकृतो भाव इति । एवं च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनाम् । अत एव “ समानकर्तृकयोः ” [ पा० सू० ३-४-२१ ] इति सूत्रे स्वशब्देनोपात्तत्वान्नेति +भाष्यप्रतीकमादाय पौर्वापर्यकाले द्योत्ये क्त्वादिर्विधीयते न तु विषय इति भाव इति कैयटः । यत्तु समानकर्तृकयोरिति सूत्रात्समानकर्तृकत्वं क्त्वावाच्यमन्यथौदनं पक्त्वाऽहं भोक्ष्य इत्यत्र मयेति तृतीयाप्रसङ्गाच्च । न चाऽऽख्यातेन कर्तुरभिधानान्न सेति वाच्यम् । भोजनक्रियाकर्तुरभिधानेऽपि पाकक्रियाकर्तुस्तदभावात् । अनभिहिते भवतीति पर्युदासाश्रयणात् । अत एव प्रासाद आस्त इत्यत्र प्रसादनक्रियाधिकरणस्याभिधानेऽप्यस्तिक्रियाधिकरणस्यानभिधानात्सप्तमीति भाष्ये स्पष्टम् । तस्मात्क्त्वाप्रत्ययस्य कर्तृवाचित्वमावश्यकमिति, तन्न, सूत्रात्तस्य वाच्यत्वालाभात् । समानकर्तृकयोः क्रिययोः पूर्वकाले क्त्वेत्येव तदर्थात् । अन्यथा समानकर्तरीत्येव सूत्रन्यासः स्यात् । तृतीयापादनं त्वाख्यातार्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात्प्रधानानुरोधेन गुणे कार्यप्रवृत्तेर्न संभवति ।

उक्तं च वाक्यपदीये—

“ प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।<br>
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥<br>
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।<br>
य[2]दा गुणे त[3]दा तद्वदनुक्ताऽपि प्रतीयते” इति ॥

किं चान्यथा कर्मणोऽपि क्त्वार्थतापत्तिः पक्त्वौदनो मया भुज्यत इत्यत्र द्वितीयायाः प्रकारान्तरेणावारणात् , इत्यास्तां विस्तरः ॥ १ ॥ ( ९८ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे<br>
क्त्वाद्यर्थनिर्णयः समाप्तः ।

---

+ इह कस्मान्न भवति पूर्वं भुङ्क्ते पश्चाद्व्रजतीत्यत्र स्वशब्देनोपात्तत्वान्नेति भाष्यमित्यर्थः ।

१ ज. °न्नव्यापारत्वबो° । २ छ. यथा । ३ छ. तथा ।

( अथ स्फोटवादः । )

---

सिद्धान्तनिष्कर्षमाह—

**वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति[1] मतस्थितिः ।**
**साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः ॥ १ ॥ ( ५९ )**

यद्यपि वर्णस्फोटः पदस्फोटो वाक्यस्फोटोऽखण्डपदवाक्यस्फोटौ वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति *वाक्यग्रहणमनर्थकं +दुरर्थकं च तथाऽपि वाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्वबोधनाय तदुपादानम् । एतदेव ध्वनयन्नाह—**अतिनिष्कर्ष** इति। **मतस्थिति**र्वैयाकरणानां महाभाष्यकारादीनाम्। तत्र क्रमेण सर्वांस्तान्निरूपयन्वर्णस्फोटं **प्रथममाह—साधुशब्द** इति । =साधुशब्दान्तर्गता वाचका न वेति विप्रतिपत्तिः । विधिकोटिरन्येषां नेति वैयाकरणानां साधुशब्दे पचति राम इति प्रयुज्यमानेऽन्तर्गतास्तिब्विसर्गादय एव **बोधका**[2] वाचकास्तेषामेव शक्तत्वस्य प्राग्व्यवस्थापितत्वान्न तु तैः **स्मृता** लादयः स्वादयश्चेत्यर्थः ॥ १ ॥ ( ५९ )

यत्तु प्रयोगान्तर्गतास्तिबादयो न वाचकास्तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः । एधांचक्रे ब्रह्मेत्यादावादेशभूतलुगादेरभावरूपस्य बोधकत्वासंभवाच्च । किंतु तैः स्मृता लकाराः स्वादयश्च वाचका लत्वस्य जातिरूपतया शक्ततावच्छेदकत्वौचित्यात् । अव्यभिचाराच्च । आदेशानां भिन्नतया परस्परव्यभिचारित्वात्† । " लः कर्मणि " [ पा० सू० ३-४-६९ ] इत्याद्यनुशासनानुगुण्याच्च । न ह्यादेशेष्वर्थबोधकमनुशासनमुपलभामह इत्याहुस्तान्स्वसाधकयुक्तिभिर्निराचष्टे—

**व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ।**
**किं चाऽऽख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि ॥**
**कथं कर्तुरवाच्यत्ववाच्यत्वे तद्विभावय ॥ २ ॥ ( ६० )**

व्यवस्थानुरोधात्प्रयोगान्तर्गता एव वाचका न तु तत्स्मृता ÷इत्यर्थः। तथा हि—पचतीत्यादौ लकारमविदुषो बोधान्न तस्य वाचकत्वम् । न च तेषां तिङ्क्षु शक्तिभ्रमाद्बोधः । तस्य भ्रमत्वे मानाभावात् । ( +प्रयोगांशानाम् ) आदेशिनामपि तत्तद्वै×याकरणैः स्वेच्छया भिन्नभिन्नानामभ्युपगमात्कः शक्तः[3] को नेति व्यवस्थानापत्तेश्च ।

---

* व्यावर्त्यालाभात् । + तदतिरिक्तानामसंग्रहश्चेत्याह । = साध्वन्तर्गतवर्णस्मारिता इत्यर्थः । † तत्रापि न तेषामनुगमः । ÷ तदपेक्षयाऽस्मिन्पक्षे बहु लाघवम् । + धनुश्चिह्नान्तर्गतं ङ. छ. ज. पुस्तकेषु नास्ति । × शाकटायनादिभिः । एवं च तेषामपि बहुत्वम् ।

---

१ च. °ति व्यवस्थि° । २ छ. °र्थः । ये तु प्र° । ३ च. शक्यः ।

सर्वेषां शक्तत्वे गौरवं व्यभिचारश्चास्त्येवाऽऽदेशानां *प्रयोगान्तर्गततया नियतत्वाद्युक्तं तेषां शक्तत्वम् । तथा चाऽऽदेशिस्मरणकल्पना नेति लाघवम् । साधकान्तरमाह—व्यवहृतेरिति । व्यवहारस्तावच्छक्तिग्राहकेषु +मुख्यः । स च श्रूयमाणतिङादिष्वेवेति त एव वाचका इत्यर्थः । किं च—तद्धेतुन्यायत इति । लकारस्य बोधकत्वे मूल इत्यतोऽपि बोधः स्यात् । तादृशे बोधे पचतीति समभिव्याहारोऽपि कारणमिति चेत्तर्ह्यावश्यकत्वादस्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः । †अन्यथा लकारस्य वाचकत्वं समभिव्याहारस्य कारणत्वं चेत्युभयं कल्प्यमिति गौरवं स्यात् । तथा च तादृशसमभिव्याहारः समभिव्याहृता वर्णा वेत्यत्र विनिगमकाभावात्प्रयोगान्तर्गता वर्णा वाचका इति सिध्यतीति भावः । अपि च लकारस्यैव वाचकत्वे कृत्तिङोः कर्तृभावनावाचकव्यवस्था त्वत्सिद्धान्तसिद्धा न स्यादित्याशयेनाऽऽह—**किं चेति**। आदेशानां वाचकत्वे तिङ्त्वेन भावनाया मानत्वादिना कर्तरि शक्तिरित्युपपद्यते विभाग इति भावः । न च शानजादौ कृतिर्लकारार्थ आश्रयः शानजर्थ इत्यस्तु "कर्तरि कृत्" [ पा० सू० ३-४-६७ ] इत्यनुशासनादिति शङ्क्यम् । स्थान्यर्थेन निराकाङ्क्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेरन्यथा घञादावपि प्रवर्तेत ॥ २ ॥ ( ६० )

देवदत्तः पचमान इत्यादिसामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादित्याशङ्क्याऽऽह—

**तरबाद्यन्ततिङ्क्ष्वस्ति नामता कृत्स्विव स्फुटा ।**
**नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्यताम् ॥ ३ ॥ ( ६१ )**

पचतितरां मैत्रः पचतिकल्पं मैत्र इत्यादिषु नामार्थत्वाभेदान्वययोः संभव एवेति कर्तृवाचकता स्यादिति भावः । न च पचतिकल्पमित्यत्र सामानाधिकरण्यानुरोधात्कर्तरि लक्षणा पचमान इत्यत्राप्यापत्तेरिति लः कर्मणीत्यत्रानुशासनं च लाघवाय कल्पिते लकारे कर्त्रादिवाचित्वं कल्पितमादायेत्युक्तम् ॥ ३ ॥ ( ६१ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
स्फोटवादे वर्णस्फोटनिरूपणं समाप्तम् ।

---

( अथ पदादिस्फोटनिरूपणम् । )

---

**अथाऽऽदेशा वाचकाश्चेत्पदस्फोटस्तत स्फुटः ॥ ४ ॥ ( ६२ )**

---

* तदपेक्षयाऽस्मिन्पक्षे बहुलाघवम् । + तत्त्वं च शक्तिग्राहकान्तरनिरपेक्षत्वम् । † समुदायस्य शक्तत्वानङ्गीकारे ।

---

१ छ. सति । २ छ. °नायां शानजादि° ।

एवमादेशानां वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एवेत्याह—**अथेत्यादि** । आदेशास्तिङ्विसर्गादयः । अयं भावः—समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकता सिध्यति । प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्प्रत्येकं वर्णानामर्थवत्त्वेन प्रातिपदिकत्वापत्तौ " नलोपः प्रातिपदिकान्तस्य " [ पा० सू० ८-२-७ ] इत्यादिभिर्धनं वनमित्यादौ नलोपाद्यापत्तेश्च । *एतच्च चर+मवर्ण एव वाचकत्वशक्तिः शक्तेः·व्यासज्यवृत्तित्वे मानाभावा=त्पूर्वपूर्ववर्णानुभवजन्यसंस्काराश्चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्थधीरिति वर्णस्फोटवादिनां मतान्तरदूषणायोक्तं रामोऽस्तीति वक्तव्ये रामित्यनन्तरं घटिकोत्तरमकारोच्चारणेऽर्थबोधापत्त्या तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यादिति दिक् ॥४॥(६२)

सुप्तिङन्तं पदमिति परि$भाषितपदस्य वाचकत्वस्वीकर्तॄणां मतमाह—

**घटेनेत्यादिषु न हि प्रकृत्यादिभिदा स्थिता ॥**
**वस्नसादाविवेहापि संप्रमोहो हि दृश्यते ॥ ५ ॥ ( ६३ )**

घटेनेत्यादौ "घटे" इति प्रकृतिर्नेति प्रत्ययः। घट(ट्) इति प्रकृतिरेनेति प्रत्यय इति विभागस्य " सर्वे सर्वपदादेशाः " इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासंभवान्न वाचकत्वमित्यर्थः । वैयाकरणैर्विभागः सुज्ञेय इत्यतो दृष्टान्तव्याजेनाऽऽह—**वस्नसाविति** । " बहुवचनस्य वस्नसौ " [ पा० सू० ८-१-२१ ] इति समुदायस्याऽऽदेशविधानान्नात्र तद्विभागः संभवतीत्यर्थः ॥ ५ ॥ ( ६३ )

सुप्तिङन्तचयरूपवाक्यस्यापि तदाह—

**हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु ॥**
**अर्थे विशिष्य संबन्धाग्रहणं चेत्समं पदे ।**
**लक्षणादधुना चेत्तत्पदेऽर्थेऽप्यस्तु तत्तथा ॥ ६ ॥ ( ६४ )**

हरेऽव विष्णोऽवेत्यादौ पदयोः " एङः पदान्तादति " [पा० सू० ६-१-१०९] इत्येकादेशे सति न तद्विभागः सुज्ञानस्तथा च प्रत्येकपदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात्समुदायेऽप्यावश्यिका शक्तिः । एवं प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वापि समुदायव्युत्पन्नत्वबोधात्तत्राप्यावश्यिकैव शक्तिरिति भावः । वस्तुतः पदैः पदार्थबोधवद्वाक्येन पदार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ । ‡ अन्यथा घटः कर्मत्वमानयनं कृति-

* तद्वाचकपुरःसरं समभिव्याहारहेतुत्वं चेत्यर्थः । + तदुच्चारणे तत्पूर्ववर्णानामसत्त्वादिति भावः । · समुदायवृत्तित्वे । = ननु तर्हि तन्मात्रश्रवणादर्थप्रतीतिः कुतो नेत्यत आह—पूर्वेति । $ पाणिन्यादिभिः । ‡ वाक्यशक्तेरनभ्युपगमे ।

१ ङ. छ. ज. 'त्पत्त्या बो' ।

( स्फोटवादः )

रित्यादौ *तादृशव्युत्पत्तिरहितस्यापि बोधप्रसङ्गः। +घटमानयेत्यत्रैव पदार्थानामुपस्थितौ सत्यपि तात्पर्यज्ञाने बोधा⌒भावाच्च । तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरं कर्मत्ववाचकविभक्तेस्ततो धातोस्तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो †बोधात्तज्ज्ञानमपि हेतुरिति चेत्तर्हि सिद्धो वाक्यस्फोटः। घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानकार्यकारणभावस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात् । अर्थोपस्थापकज्ञानविषयशब्दवृत्तिज्ञानकारणत्वस्यैव शक्तित्वात् । युक्तं चैतद्विषयतासंबन्धेन शाब्दबोधमात्रे वृत्तिज्ञानस्य लाघवेन हेतुत्वसिद्धेः। विवेचितं चैतद्भूषणे। ननु वाक्यार्थस्यापूर्वत्वात्कथं तत्र शक्तिग्रह इत्याशङ्क्याऽऽह—**अर्थ इति**। वाक्यस्येति शेषः। वाक्यस्य वाक्यार्थे विशिष्य शक्त्यग्रहणं चेत्तर्हि पदेऽपि समम्। पद एवान्वयांशे शक्तिरिति पक्षेऽपि तद्ग्रहासंभवस्तुल्य इत्यर्थः । यदि च पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादस्तदा मम[1]ापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः । ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद्वाक्यार्थेऽपि तद्ग्रह इति चेत्तुल्यमित्याह—**लक्षणादिति**। लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मात् । अपिः पदपदोत्तरं बोध्यः, पदेऽपि लक्षणात्तद्ग्रहश्चेत्तर्ह्यस्तु वाक्येऽपीति शेषः। वस्तुतस्तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं तद्ग्रहः। आवापोद्वापाभ्यां परं प्रत्येकं तद्ग्रह इति बोध्यम् ॥ ६ ॥ ( ६४ )

इयमेव मीमांसकानां वेदान्तैकदेशिनां च गतिरित्याह—

> **सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः।**
> **भाट्टास्तेऽपीत्थमेवाऽऽहुर्लक्षणाया ग्रहे गतिम् ॥ ७ ॥( ६५ )**

**भाट्टा इति** तदनुयायिनां वाचस्पतिकल्पतरुप्रभृतीनामुपलक्षणम् । स्पष्टमेतत्।

ननूक्तपक्षद्वयमनुपपन्नमुत्पत्तेरभिव्यक्तेर्वैकदाऽसंभवेन वर्णसमूहरूपपदज्ञानासंभवात्। तथा च सुतरां तत्समूहरूपवा[2]क्यार्थज्ञानासंभव इति चेन्न । उत्तरवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसंबन्धेनोपस्थितपूर्ववर्णवत्त्वं तथा तदुत्तरप्रत्यक्षकाल उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन्सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्येव वाक्यत्वस्यापि सुग्रहत्वात् ॥ ७ ॥ ( ६६ )

इदानीमखण्डपक्षमाह—

> **पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
> **वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥ ८ ॥ ( ६६ )**

---

* पदार्थसंसर्गबोधकत्वरूपवाक्यशक्तिज्ञानरहितस्य । + अत्र तादृशव्युत्पत्तिरहितस्येत्यनुषज्यते। ⌒किं पुनर्घटः कर्मत्वमित्यत्र वक्तव्यमिति शेषः। † समभिव्याहारनिष्ठबोधजनकज्ञानमपि।

---

[1] ङ. 'माप्यन्वयांशे वा'। [2] ङ. छ. ज. 'वाक्यज्ञा'।

पदे पचतीत्यादौ न वर्णाः, नातो वर्णसमूहः पदमिति शेषः । दृष्टान्तव्याजेनाऽऽह—**वर्णेष्विति** । एकारौकारलकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा नेत्यर्थः । क्वचिदि[१]त्येव पाठः । एवं वाक्येऽप्याह—**वाक्यादिति** । पदानामपि वाक्याद्विवेको भेदो नास्तीत्यर्थः । अयं भावः—वाक्यं पदं वाऽखण्डमेव न तु वर्णसमूहः । अनन्तवर्णकल्पने मानाभावात् । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव* ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसंभवात् । स्पष्टं हि भामत्याम्—"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इत्युक्तं देवताधिकरणे । न चैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम् । प्रत्यक्षोपलभ्यमानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात् । तथा च वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्या च स्फोटोऽखण्डः सिध्यति । एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवाच्छ्रूयमाणवर्णानामेव वाचकत्वमस्त्वित्यपास्तम् । ÷तेषां स्फोटातिरिक्तत्वाभावात् । यत्तु वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः । समुदायस्य तु क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा ज्ञानमसंभाव्यमेव । पूर्वपूर्ववर्णानुभवसंस्कारसहकारेणैकदा समूहालम्बनरूपसकलज्ञानसंभवस्तु सरो रसो जरा[३]राजनदीदीनादिसाधारण इत्यतिप्रसङ्ग इति स्फोट एवा+खण्डो नादाभिव्यङ्ग्यो वाचक इति कैयटः । तत्तुच्छम् । पदज्ञानसंभवस्योपपादितत्वाद्वर्णानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च । ननु त्वन्मतेऽप्येष दोषः । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेति विकल्प[४]गणसंभवादिति चेत् । उच्यते । प्रत्येकमेव संयोगाभिव्यञ्जकाः परं तु केचिद्गत्वेन केचिदौत्वेन केचिद्विसर्गत्वेनेत्यनेकैः प्रकारैरत एव वर्णानां †तदतिरेकास्वीकारोऽप्युपपद्यते । एवं चाव्यवहितोत्तरत्वसंबन्धेन घटत्वं टकारे ×गृह्यते । एतादृशपदज्ञानकारणताया अविवादात् । परं त्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वं वाच्यमत एव घज्ञानानन्तरटज्ञानविषयत्वरूपानुपूर्वीत्यादिर्नैयायिकवृद्धानां व्यवहारः । एवं च न कश्चिद्दोषः । ¶एतेन पर्यायस्थलेष्वेक एव स्फोटः, नाना वा । नाऽऽद्यः । घटपदे गृहीतशक्तिकस्य कलशपदाद्बोधप्रसङ्गात् । न च तत्पर्यायाभिव्यक्ते शक्तिग्रहस्तत्पर्यायश्रवणेऽर्थधीहेतुरिति वाच्यम् । एवं सति

---

* पदादिस्फोट आरोप्य । ÷ गत्वादीनाम् । + वर्णाद्यघटित इत्यर्थः । †स्फोटातिरेकत्वस्यासत्त्वात् । × अतो न रसात्सरभानम् । ¶ वर्णानुपूर्व्यवच्छिन्नस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः ।

---

१ ङ. छ. भावः । २ ङ. छ. 'दिवेत्ये' । ३ च. ज. राजान' । ४ छ. 'ल्पस्य सं' । ज. 'ल्पग्रहण' ।

प्रतिपर्यायं शक्तिग्रहावश्यंभावेन तत्तत्पर्यायगतशक्तिग्रहहेतुताया उचितत्वात् । तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवाच्च । अन्यथा तत्पर्यायाभिव्यक्तगतशक्तिग्रहत्वेन तत्त्वे गौरवात् । न द्वितीयः । अनन्तपदार्थानां तेषां शक्तिं चापेक्ष्य वर्णत्रवर्णेष्वेव शक्तिकल्पनस्य लघुत्वादिति परिमलोक्तमपास्तम् । *पर्यायेष्वनेकशक्तिस्वीकारस्य सर्वसिद्धत्वात्तदवच्छेदकानुपूर्व्याः प्रागुपपादनादिति दिक् । शब्दकौस्तुभे तु +वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः, ÷अन्यथा †कपालातिरिक्तघटासिद्धिप्रसङ्गश्चेति प्रतिपादितम् ॥ ८ ॥ ( ६६ )

नन्वेवं ×शास्त्राप्रामाण्यप्रसङ्गः पदस्याखण्डत्वात् । शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादित्याशङ्कां समाधत्ते—

**पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता ।**
**उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ॥ ९ ॥ ( ६७ )**

उपेयप्रतिपत्त्यर्था इत्यन्तेनान्वयः । अयं भावः—( =यथा भृगुवल्ल्यां "भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान् । स उवाचान्नम्" इति तस्योत्पत्त्यादिकं बुद्ध्वा पृष्टे प्राणमनोविज्ञानानन्दात्मकपञ्चकोशोपदेशोत्तरं "ब्रह्म पुच्छं प्रतिष्ठा" इति ज्ञेयं ब्रह्म प्रतिपादितम् । तच्च कोशपञ्चकव्युत्पादनं शुद्धब्रह्मबोधनाय, [⊙यथा वाऽऽनन्दवल्लीस्थपञ्चकोशव्युत्पादनं वास्तवशुद्धब्रह्मबोधनाय ) यथाऽऽनन्दवल्ल्यामन्नप्राणमनोविज्ञानानन्दमयात्मककोशपञ्चकव्युत्पादनं ·वास्तवपुच्छब्रह्मबोधनाय], एवं प्रकृतिप्रत्ययादिव्युत्पादनं वास्तवस्फोटव्युत्पादनायैवेति । ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसंभवान्न शास्त्रं तदुपाय इत्यत आह—उपाया इति । उपायस्योपायान्तरादूषकत्वात् । तथा च व्याकरणाभ्यासजन्यज्ञाने वैजात्यं कल्प्यते मन्त्रजन्यमिवार्थस्मरणे वेदान्तजन्यमिव ब्रह्मज्ञाने, तस्य च ज्ञानस्य यज्ञादीनामन्तःकरणशुद्धाविव शरीरादिशुद्धावुपयोगः साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वं च ।

तदुक्तं वाक्यपदीये—

"तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्[1] ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।

---

*तत्तत्पर्यायरूपधर्मिभेदभिन्नाऽत्र शक्तिः । ( शक्ततावच्छेदकानुपूर्व्याः । +आनुपूर्वीयुक्तायाम् । ÷ प्रतीतेः पदार्थसाधकत्व इत्यर्थः । † कपाले घट इति प्रतीत्या भेदावगाहिन्या तत्सिद्धिः । × एवमुक्तस्फोटस्य वाचकत्व इत्यर्थः । = धनुश्चिह्नान्तर्गतग्रन्थो ङ. च. पुस्तकयोर्नास्ति । ⊙ एतच्चिह्नान्तर्गतो ग्रन्थोऽधिकोऽसंगतश्च क्वचित् ।

---

१ च. चिकीर्षितम् ।

इयं सा मोक्षमार्गाणामजिह्मा राजपद्धतिः ॥
अत्रातीतविपर्यासः[1] केवलामनुपश्यति " इति ॥

न चालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोधः । तस्यालीकत्वासिद्धेर्वक्ष्यमाणत्वात् । एवं रेखागवयन्याय आदिना गृह्यते ॥ ९ ॥ ( ६७ )

ननु स्फोटस्य वर्णजातीयानां च नित्यतया ककार उत्पन्न इति न स्यात् । वायुसंयोगनिष्ठजातेः स्फोटे भाने कादिप्रतीतीनां भ्रमत्वापत्तिश्चेत्यत आह—

**कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ।**
**स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्वते ॥ १० ॥ ( ६८ )**

स्वीकारस्थलमाह—**स्वरदैर्घ्याद्यपीति** । आदिनोत्पत्तिविनाशादिसंग्रहः । उदात्तत्वादि न वर्णनिष्ठं तस्यैकत्वान्नित्यत्वाच्च । तच्च स एवायमिति प्रत्यभिज्ञानात् । न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयो[2] व्यक्त्यंशाभेदस्यापि भासमानस्य विना बाधकं त्यागायोगात् । न चोत्पत्तिप्रतीतिर्बाधिका । प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्वर्णेष्वनुभवविरुद्धत्वात् । अत एव वर्णमुच्चारयतीति प्रत्ययो न तूत्पादयतीति प्रत्ययो व्यवहारश्च । उच्चरितत्वं च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । किं च—व्यञ्जकध्वनिनिष्ठोत्पत्त्यादेः परम्परया वर्णनिष्ठत्वविषयत्वेनाप्युपपत्तेर्न साऽतिरिक्तवर्णसाधिका । परम्परया वर्णनिष्ठत्वाभ्युपगमाच्च न भ्रमत्वम् । साक्षात्संबन्धांशे भ्रम इत्यवशिष्यते । तदपि सोऽयमित्यत्र व्यक्त्यभेदांशे तव भ्रमत्ववत्तुल्यम् । परं तु ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पना नेति लाघवमतिरिच्यते । न च वर्णस्थले[3] ध्वनिसत्त्वे मानाभावः । तदुत्पादकशङ्खाद्यभावेन[4] तदसंभवश्चेति वाच्यम् । ककाराद्युच्चारणस्थले तत्तत्स्थानस्य जिह्वाया ईषदन्तरपाते वर्णानुत्पत्तेर्ध्वन्युत्पत्तेश्च दर्शनाज्जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वकल्पनात् । तस्य च वर्णोत्पत्तिस्थलेऽपि सत्त्वात्तवैव प्रतिबन्ध्यप्रतिबन्धकभावकल्पना निष्प्रमाणिकी(का) स्यादिति विपरीतं गौरवमेवं परस्परविरोधादुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादिकमपि न वर्णनिष्ठं युक्तमिति तेषामभिप्रायः । एवं चोत्पत्त्यादिप्रतीतीनां तत्प्रमात्वस्य च निर्वाहः परेषामपि समान इति प्रतिबन्द्येवोत्तरमिति भावः ॥ १० ॥ ( ६८ )

इत्थं पञ्च व्यक्तिस्फोटाः । जातिस्फोटमाह—

**शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ।**
**औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ॥ ११ ॥ (६९)**

अयं भावः—वर्णास्तावदावश्यका उक्तरीत्या च सोऽयं गकार इतिवद्योऽयं गकार इति श्रुतः सोऽयं हकार इत्यपि स्यात् । स्फोटस्यैकत्वात् । गकारोऽयं न

---

१ ज. 'र्यासं के' । २ ज. 'त्वाद्यव' । ३ ज. वर्णोत्पत्तिस्थ' । ४ ज. 'शङ्खाद्य' ।

हकार इत्यनापत्तेश्च। किं च स्फोटे गत्वाद्यभ्युपेयं न वा । आद्ये स एव गकारोऽस्तु वर्णनित्यतावादिभिरतिरिक्तगत्वानङ्गीकारात् । तथा चातिरिक्तस्फोटकल्पन एव गौरवम्, अन्त्ये गकारादिप्रतीतिविरोधः। वायुसंयोगवृत्तिध्वनिवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति चेत् । न प्रतीतेर्विना बाधकं भ्रमत्वासंभवात् । अस्तु वा वायुसंयोग एव गकारोऽपि तस्यातीन्द्रियत्वं दोष इति चेद्धर्मवदुपपत्तेरिति कृतं स्फोटेन । तस्मात्सन्त्येव वर्णाः परं तु न वाचका गौरवात् । आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद्वाचकत्वस्यापि युक्तत्वाच्च । इदं हरिपदमित्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जातिविशेषस्यावश्यकल्प्यत्वात् । न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः, घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिश्चान्यथासिद्ध्यापत्तेः । तस्मात्सा जातिरेव वाचिका तादात्म्येन तदवच्छेदिका चेति । ननु सरो रस इत्यादौ तयोर्जात्योः सत्त्वादर्थभेदबोधो न स्यादित्यत आह—**औपाधिको वेति** । वा त्वर्थे । उपाधिरानुपूर्वी सैव जातिविशेषाभिव्यञ्जिकेति भेदः कारणीभूतज्ञानस्येति नातिप्रसङ्ग इति भावः । उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह—**वर्णानामिति** ॥ ११ ॥ ( ६९ )

ननु जातेः प्रत्येकं वर्णेष्वपि सत्त्वात्प्रत्येकादर्थबोधः स्यादित्यत आह—

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता[2] ।**
**कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥ १२ ॥ ( ७० )**

अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता । योगार्थतया बोधिकेति यावत् । एतेन स्फोटस्य नित्यत्वात्सर्वदाऽर्थबोधापत्तिरित्यपास्तम् । अयं भावः—यद्यपि वर्णस्फोटपक्षे कथितदोषोऽस्ति तथाऽपि पदवाक्यपक्षयोर्न, तत्र तस्या व्यासज्यवृत्तित्वस्य धर्मिग्राहकमानसिद्धत्वादिति **कैश्चिद्व्यक्तयो** ध्वनय एव ध्वनिवर्णयोर्भेदाभावादीत्यभ्युपेयन्त इति शेषार्थः। उक्तं हि काव्यप्रकाशे—"बुधैर्वैयाकरणैः प्रधानीभूतस्फोटव्यञ्जकस्य[3] शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति ॥ १२ ॥ (७०)

ननु का सा जातिस्तत्राऽऽह—

**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।**
**सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥ १३ ॥ (७१)**

**प्रतिभावं** प्रतिपदार्थं सत्यांशो जातिरसत्या व्यक्तयः। तत्तद्व्यक्तिविशिष्टब्रह्मैव जातिरिति भावः । उक्तं च कैयटेन—" असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः " इति । "ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति" इति च । कथं तर्हि ब्रह्मद-

---

१ ङ. च. तदेव । २ ज. स्मृतः । ३ छ. °टरूपव्यङ्ग्यव्य° । ज. °टव्यङ्ग्यव्य° ।

र्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम् , आत्मैवेदं सर्वमिति श्रुतिवचनादिति कैयटः संगच्छताम् । अविद्याऽऽविद्यको धर्मविशेषो वेति पक्षान्तरमादायेति द्रष्टव्यम् ॥ १३ ॥ ( ७१ )

तमेव सत्यांशं स्पष्टयति—

**इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।**
**ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ १४ ॥ ( ७२ )**

( इति भट्टोजिदीक्षितविरचितकारिकासु पदादिस्फोटनिरूपणम् । )

समाप्तः स्फोटवादः ।

**इति भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाः समाप्ताः ।**

अयं भावः—" नामरूपे व्याकरवाणि " इतिश्रुतिसिद्धा द्वयी सृष्टिस्तत्र रूपस्येव नाम्नोऽपि तदेव तत्त्वम् । प्रक्रियांशस्त्वविद्याविजृम्भणमात्रम्[1] ।

उक्तं च वाक्यपदीये—

" शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम्" इति ॥

ब्रह्मैवेत्यनेन " अत्रायं पुरुषः स्वयंज्योतिः " " तमेव भान्तमनु भाति सर्वम् " " तस्य भासा सर्वमिदं विभाति " इतिश्रुतिसिद्धं स्वपर[2]प्रकाशत्वं सूचयन्[3]स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिकं स्फोटशब्दाभिधेयत्वं सूचयति । निर्विघ्नप्रचयान्ते मङ्गलं स्तुतिनुतिरूपमाह—**पूर्णात्मन इत्यादिना** ॥

अशेषफलदातारमपि सर्वेश्वरं गुरुम् ।
श्रीमद्भूषणसारेण भूषये शेषभूषणम् ॥ १४ ॥ ( ७२ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
स्फोटवादे पदादिस्फोटनिरूपणं समाप्तम् ॥

समाप्तश्च स्फोटवादः ।

**इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणरङ्गोजिभट्टात्मजकौण्डभट्टविरचितो वैयाकरणभूषणसारः समाप्तः ॥**

---

१ ज. °म्भमाण° । २ ज. स्वप्र° । ३ छ. सूचयति ।

## अथ भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाद्य-चरणप्रतीकानामकारादिवर्णानुक्रमसूची ।


| प्रतीकानि । | पृ० | का० |
|---|---|---|
| **अ.** | | |
| अत एव गवित्याह .... | ३० | २७ |
| अथाऽऽदेशा वाचकाश्चे- | ५७ | ६२ |
| अत्रार्धजरतीयं स्यात् .... | ४८ | ४९ |
| अनेकव्यक्त्यभिव्यङ्ग्या .... | ६३ | ७० |
| अभावो वा तदर्थोऽस्तु .... | ४२ | ४० |
| अभेदैकत्वसंख्याया .... | ५२ | ५४ |
| अविग्रहा गतादिस्था .... | १६ | १९ |
| अव्ययकृत इत्युक्तेः .... | ५४ | ५८ |
| अषष्ठ्यर्थबहुव्रीहौ .... | ३४ | ३३ |
| असाधुरनुमानेन.... .... | ४० | ३७ |
| अस्त्यादावपि धर्म्यंशे .... | ११ | १२ |
| **आ.** | | |
| आख्यातशब्दे भागाभ्यां | १३ | १४ |
| आख्यातं तद्धितकृतो- .... | ३७ | ३४ |
| आश्रयोऽवधिरुद्देश्यः .... | २१ | २४ |
| **इ.** | | |
| इत्थं निष्कृष्यमाणं य- .... | ६४ | ७२ |
| इन्द्रियाणां स्वविषये .... | ३८ | ३६ |
| **उ.** | | |
| उत्सर्गोऽयं कर्मकर्तृ- .... | ५ | ४ |
| **ए.** | | |
| एकं द्विकं त्रिकं चाथ .... | २७ | २५ |
| **क.** | | |
| कल्पितानामुपाधित्वं .... | ६२ | ६८ |
| **कि.** | | |
| किं कार्यं पचनीयं चे- .... | ९ | ९ |
| किं तूत्पादनमेवातः .... | ७ | ६ |
| **कृ.** | | |
| कृत्तद्धितसमासेभ्यो .... | ४८ | ४८ |
| कृत्वोर्थाः क्त्वातुमुन्वत्स्यु- | १६ | २० |
| **क्री.** | | |
| क्रीडायां णस्तदस्यास्ती- | ५१ | ५३ |
| **घ.** | | |
| घटेनेत्यादिषु न हि .... | ५८ | ६३ |
| **च.** | | |
| चकारादिनिषेधोऽथ .... | ३४ | ३२ |
| **ज.** | | |
| जहत्स्वार्थाजहत्स्वार्थे .... | ३२ | ३० |
| **त.** | | |
| तथाऽन्यत्र निपातेऽपि .... | ४४ | ४२ |
| तथा यस्य च भावेन .... | १९ | १७ |
| तरबाद्यन्ततिङ्क्ष्वस्ति .... | ५७ | ६१ |
| तस्मात्करोतिर्धातोः स्यात् | ८ | ८ |
| **द्यो.** | | |
| द्योतकाः प्रादयो येन .... | ४४ | ४१ |
| **धा.** | | |
| धात्वर्थत्वं क्रियात्वं चे- .... | ११ | ११ |
| **न.** | | |
| नञ्समासे चापरस्य .... | ४२ | ३९ |
| नञ्समासे चापरस्य .... | ४६ | ४५ |
| **नि.** | | |
| निपातत्वं परेषां यत् .... | ४७ | ४७ |

| प्रतीकानि । | पृ० | का० |
|---|---|---|
| निपातानां वाचकत्व– .... | ४७ | ४६ |
| निर्वर्त्ये च विकार्ये च .... | ७ | ७ |
| **प.** | | |
| पञ्चकोशादिवत्तस्मा– .... | ६१ | ६७ |
| पदार्थः सदृशाऽन्वेति .... | ४५ | ४३ |
| पदे न वर्णा विद्यन्ते .... | ५९ | ६६ |
| पर्यवस्यच्छाब्दबोधा– .... | ३८ | ३५ |
| **प्र.** | | |
| प्रत्ययार्थस्यैकदेशे .... | ५१ | ५१ |
| प्रदेय एव वा शक्तिः .... | ५१ | ५२ |
| प्रयोगोपाधिमाश्रित्य .... | ४९ | ५० |
| **फ.** | | |
| फणिभाषितभाष्याब्धेः .... | १ | १ |
| फलव्यापारयोरेक– .... | १२ | १३ |
| फलव्यापारयोर्धातु· .... | २ | २ |
| फलव्यापारयोस्तत्र .... | ५ | ३ |
| **भे.** | | |
| भेद्यभेदकसंबन्धो .... .... | १७ | २१ |
| **य.** | | |
| यदि पक्षेऽपि वत्यर्थः .... | १५ | १८ |
| **र.** | | |
| रदाभ्यां वाक्यभेदेन .... | ५४ | ५७ |
| **ल.** | | |
| लक्ष्यानुरोधात्संख्याया– | ५३ | ५५ |
| **व.** | | |
| वर्तमाने परोक्षे श्वो– .... | १८ | २२ |
| **वा.** | | |
| वाक्यस्फोटोऽतिनिष्कर्षे | ५६ | ५९ |

| प्रतीकानि । | पृ० | का० |
|---|---|---|
| **वि.** | | |
| विधेये भेदकं तत्र– .... | ५३ | ५६ |
| **व्य.** | | |
| व्यवस्थितेऽर्यवहृते- .... | ५६ | ६० |
| **व्या.** | | |
| व्यापारो भावना सैवो– | ६ | ५ |
| **श.** | | |
| शक्यत्व इव शक्तत्वे .... | ६२ | ६९ |
| शब्दोऽपि यदि भेदेन .... | २९ | २६ |
| शरैरुस्रैरिवोदीच्या– .... | ४५ | ४४ |
| **स.** | | |
| सत्यासत्यौ तु यौ भागौ | ६३ | ७१ |
| समासस्तु चतुर्धेति .... | ३१ | २९ |
| समासे खलु भिन्नैव .... | ३३ | ३१ |
| सर्वत्रैव हि वाक्यार्थो .... | ५९ | ६५ |
| सर्वनामाव्ययादीनां .... | ११ | १० |
| **सा.** | | |
| साध्यत्वेन क्रिया तत्र .... | १३ | १५ |
| **सु.** | | |
| सुपां सुपा तिङा नाम्ना .... | ३० | २८ |
| **सं.** | | |
| संबन्धशब्दे संबन्धो .... | ४२ | ३८ |
| संबोधनान्तं कृत्वोर्थाः .... | १४ | १६ |
| **ह.** | | |
| हरेऽवेत्यादि दृष्ट्वा च .... | ५८ | ६४ |
| **ह्यो.** | | |
| ह्योभूते प्रेरणादौ च .... | १९ | २३ |


इति भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाद्य-
चरणप्रतीकानामकारादिवर्णानुक्रमसूची समाप्ता ।